॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

११०

# सामवेदीयत्रिकालसन्ध्यातर्पणप्रयोगः

श्रीविश्रामात्मजशिवरामशुक्लकृत-

सुबोधिनीपद्धतेः संगृहीतः

काशीस्थ जो० म० गोयनका-संस्कृत-महाविद्यालयीय-

सामवेदाध्यापकेन

"विद्यावारिधि–सामवेदवाचस्पति"

पं० दुर्गादत्तत्रिपाठिना

टिप्पण्यादिभिरलङ्कृतः संशोधितश्च ।



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी–१

॥ श्रीः ॥

# सामवेदीयत्रिकालसन्ध्यातर्पणप्रयोगः ।

## अथ प्रातःसन्ध्या ।

श्रीगणेशाय नमः ॥ तत्रादौ स्नात्वा धौते वाससी परिधायाचम्य, कृततिलकः शुद्धासने उपविश्य सन्ध्यां कुर्यात् । तत्र सव्यहस्ते कुशत्रयं दक्षिणहस्ते कुशद्वयं धृत्वा आचम्य 'मम उपात्तदुरितक्षयार्थं ब्रह्मवर्चसकामार्थं प्रातः सन्ध्योपासनमहं करिष्ये इति सङ्कल्प्य, दक्षिणहस्तेन जलमादाय, प्रदक्षिणं परितः सिञ्चन्नात्मरक्षां कुर्यात् । (१) ततः ऋष्यादीन् संस्मृत्य मार्जनं कुर्यात् । ॐकारस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः अग्निर्देवता सर्वकर्मारम्भे विनियोगः । व्याहृतीनां विश्वामित्र-जमदग्नि-भरद्वाजा गायत्र्युष्णिगनुष्टुबग्निवायुसूर्याः, तत्सवितुर्विश्वामित्रो गायत्री सविता, आपोहिष्ठेति तिसृणां सिन्धुद्वीपो गायत्र्यापः मार्जने विनियोगः । ततो दक्षिणहस्ते कुशत्रयमादाय, नद्यादौ जलाशयस्थं स्थले पात्रस्थं वामहस्तस्थं वा कुशाग्रैर्जलमादाय, मार्जनं कुर्यात् ।

ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐ आपो हि ष्ठा मयो भुवः । ॐ ता न ऊर्जे दधातन । ॐ महे रणाय चक्षसे । ॐ यो वः शिवतमो रसः । ॐ

(१) तत्र मन्त्रः—ॐ अपहता असुरा रक्षाꣳसि वेदिषदः ।

॥ श्रीः ॥

# सामवेदीयत्रिकालसन्ध्यातर्पणप्रयोगः ।

## अथ प्रातःसन्ध्या ।

श्रीगणेशाय नमः ॥ तत्रादौ स्नात्वा धौते वाससी परिधायाचम्य, कृततिलकः शुद्धासने उपविश्य सन्ध्यां कुर्यात् । तत्र सव्यहस्ते कुशत्रयं दक्षिणहस्ते कुशद्वयं धृत्वा आचम्य 'मम उपात्तदुरितक्षयार्थं ब्रह्मवर्चसकामार्थं प्रातः सन्ध्योपासनमहं करिष्ये इति सङ्कल्प्य, दक्षिणहस्तेन जलमादाय, प्रदक्षिणं परितः सिञ्चन्नात्मरक्षां कुर्यात् । (१) ततः ऋष्यादीन् संस्मृत्य मार्जनं कुर्यात् । ॐकारस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः अग्निर्देवता सर्वकर्मारम्भे विनियोगः । व्याहृतीनां विश्वामित्र–जमदग्नि–भरद्वाजा गायत्र्युष्णिगनुष्टुबग्निवायुसूर्याः, तत्सवितुर्विश्वामित्रो गायत्री सविता, आपोहिष्ठेति तिसृणां सिन्धुद्वीपो गायत्र्यापः मार्जने विनियोगः । ततो दक्षिणहस्ते कुशत्रयमादाय, नद्यादौ जलाशयस्थं स्थले पात्रस्थं वामहस्तस्थं वा कुशाग्रैर्जलमादाय, मार्जनं कुर्यात् ।

ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐ आपो हि ष्ठा मयो भुवः । ॐ ता न ऊर्जे दधातन । ॐ महे रणाय चक्षसे । ॐ यो वः शिवतमो रसः । ॐ

---

(१) तत्र मन्त्रः—ॐ अपहता असुरा रक्षाꣳसि वेदिषदः ।

तस्य भाजयते हनः । ॐ उशतीरिव मातरः । ॐ तस्मा अरङ्ग-मामवो । ॐ यस्य क्षयाय जिन्वथ । ॐ आपो जनयथा च नः ।

एभिर्मन्त्रैः शिरसि मार्जनं कृत्वा ध्यानावाहने कुर्यात् ।

पूर्वा सन्ध्या तु गायत्री रक्ताङ्गी रक्तवाससा ।
अक्षसूत्रधरा देवी कमण्डलुसमन्विता ॥
हंसस्कन्धसमारूढा तथा च ब्रह्मदैवता ।
कुमारी ऋग्वेदमुखी ब्रह्मणा सह आवह ॥
आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ।
गायत्रि च्छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते ॥

ततः प्राणायामः । भूरादीनां विश्वामित्र-जमदग्नि-भरद्वाज-गौतमाऽत्रिवसिष्ठकश्यपाः गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्ति-त्रिष्टुब्जगत्योऽग्निवायु-सूर्य्य-बृहस्पतिवरुणेन्द्रविश्वेदेवाः, तत्स-वितुर्विश्वामित्रो गायत्री सविता, आपो ज्योतिः प्रजापतिर्यजु-र्ब्रह्माग्निवायुसूर्याः प्राणायामे विनियोगः । ततोऽङ्गुष्ठतर्जनीभ्यां नासापुटद्वयं धृत्वा, मुखनासासञ्चारिणं वायुं निरुन्ध्य, मनसा भूरादि जपन्प्राणायामं कुर्यात् ।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।

एवं त्रिरावृत्त्या एकः प्राणायामः । इत्थं प्राणायामत्रयं कृत्वा आचमनं कुर्यात् ।

सूर्यश्चेति नारायण ऋषिः प्रकृतिश्छन्दः सूर्यो देवता आचमने विनियोगः। ततो हस्ते जलमादाय।

ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्च दुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा। इति मन्त्रेणाचम्य तूष्णीं द्विराचामेत्।

ततोऽञ्जलिप्रक्षेपः। हस्तेनैकेन जलमादाय, ऋतञ्चेत्यघमर्षणोऽनुष्टुब्भाववृत्तः अघमर्षणे विनियोगः।

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः॥
समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥

इमं मन्त्रमायतासुः सकृदनायतासुर्वा त्रिः पठित्वा, जलं प्रक्षिप्योत्थाय' हस्ताभ्यां जलमादाय, सप्रणवव्याहृतिकां गायत्रीमुच्चार्य सूर्याभिमुखोऽञ्जलित्रयं प्रक्षिपेत्।

ततः प्रदक्षिणमावृत्याचम्य, स्वस्तिकाकृतिकृतहस्तः सूर्यमुपतिष्ठेत्। उदुत्यं प्रस्कण्वो गायत्री सूर्यः, चित्रङ्कुत्सस्त्रिष्टुप् सूर्यः उपस्थाने विनियोगः।

ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्॥ १॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याऽग्नेः । आ प्राद्यावापृथिवी अन्तरिक्ष ँ सूर्य आत्मा जगतस्तस्थुषश्च ॥१॥

ततः प्रणवव्याहृतिगायत्रीणामृष्यादीन्पूर्ववत्स्मृत्वा 'जपे विनियोगः' इत्युक्त्वा, करमालया नाभौ उत्तानधृतकरो मौनी प्रणवव्याहृतियुतां गायत्रीमष्टोत्तरशतमष्टाविंशति वा सञ्जप्य सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या मत्कृतेन जाप्येन ब्रह्मात्मा रविः प्रीयताम्' । ततः—

उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी ।
ब्रह्मणा समनुज्ञाता गच्छ देवि यथासुखम् ॥
इति विसृज्य द्विराचामेत् ॥

इति प्रातःसन्ध्या ॥

---

## अथ मध्याह्न-सन्ध्या ॥

तत्र प्रातःसन्ध्यावत्सर्वम् । विशेषो यथा-'मध्याह्नसन्ध्योपासनमहं करिष्ये' इति सङ्कल्पे ।

मध्याह्ने वै तु या सन्ध्या श्वेताङ्गी श्वेतवाससा ।
वृषस्कन्धसमारूढा तथा च रुद्रदैवता ॥ १ ॥
युवा यजुर्वेदमुखी रुद्रेण सह आवह ।
आयाहि वरदे देवि त्र्यक्षरे रुद्रवादिनि ॥ २ ॥
सावित्रि च्छन्दसां माता रुद्रयोने नमोऽस्तु ते ॥

इत्यावाहनम् । ततः प्राणायामः पूर्ववत् । आचमनं—आपः पुनन्त्विवति वामदेवोऽनुष्टुबाप आचमने विनियोगः ।

ॐ आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम् ।

पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥

यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।
सर्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहँ स्वाहा ॥

अनेनाचम्य तूष्णीं द्विराचम्य । ऋतञ्च सत्यञ्चे त्यनेनाघमर्षणान्तं पूर्ववत् । तत उत्थाय, सूर्याभिमुखो गायत्र्यैकाञ्जलिं प्रक्षिप्य, प्रदक्षिणं कृत्वा, आचम्य सूर्यमुपतिष्ठेत् ।

भूम्यलग्नपादद्वयगुल्फ, एकपादस्थो वा एकपादेनाप्यर्द्धपादस्थो वा उद्‌र्ध्वबाहुरुदुत्यं चित्रन्देवानामिति ऋग्द्वयोपस्थानानन्तरं विभ्राड् बृहत्पिबत्वित्यादि इच्छया जपेद्यावद्दशतिसमाप्तिर्वाग् वा । विभ्राडिति सूर्यो जगती सूर्यः, चित्रं कुत्सस्त्रिष्टुप् सूर्यः, आयङ्गौरिति तिसृणां सर्पा गायत्री सूर्यः अपत्येता इत्याद्यष्टर्चस्य प्रस्कण्वा गायत्री सूर्यः उपस्थाने विनियोगः ।

ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥१॥
ॐ चित्रं देवाना मुदगादनीकं चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।
आप्राद्यावा पृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च ॥२॥
ॐ विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजति ॥३॥
चित्रं देवाना मुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।

आ प्राद्यावा पृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥४॥

आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरञ्च प्रयन्त्स्वः॥५॥

अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम्॥६॥

त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते। प्रतिवस्तो रहद्युभिः॥७॥

अपत्येता यवो यथा नक्षत्रायन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥८॥

अदृश्रन्नस्य केतवो विरश्मयो जनाꣳ अनु । भ्राजन्तो अग्न-
यो यथा ॥ ९ ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ।१०।

प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वꣳस्वर्दृशे ११

येना पावक चक्षसा भुरण्यन्तञ्जनाꣳ अनु । त्वं वरुण पश्यसि ।१२।

उद्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः । पश्यञ्जन्मानि सूर्य।१३।

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्र्यः । ताभिर्याति स्व-
युक्तिभिः ॥ १४ ॥

सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण॥१५॥

सूर्यमुपस्थाय तर्पणं कुर्यात् । प्राङ्मुखः पातितदक्षिणजानुर्दक्षिणहस्ते धृतकुशत्रयः शुक्लैस्तिलैः कुशाग्रैर्देवतीर्थेन । देवान् जलाशयात्प्रादेशमात्रहस्ताञ्जलिमुद्धृत्य तर्पयेत् ।

ॐ नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च । इति कृताञ्जलिः पठित्वा अग्न्यादींस्तर्पयेत् । (१) आदौ प्रणवमन्ते च तृप्यत्विति सर्वत्र योज्यम् ।

ॐ अग्निस्तृप्यतु । ॐ प्रजापतिस्तृप्यतु । ॐ विश्वेदेवास्तृप्यन्तु । ॐ ॐकारस्तृप्यतु । ॐ वषट्कारस्तृप्यतु । ॐ महाव्याहृतयस्तृप्यन्तु । ॐ गायत्री तृप्यतु । ॐ ब्रह्मा तृप्यतु । ॐ विष्णुस्तृप्यतु । ॐ वेदास्तृप्यंतु । ॐ देवास्तृप्यंतु । ॐ ऋषयस्तृप्यंतु । ॐ मुनयस्तृप्यंतु । ॐ आचार्यास्तृप्यंतु । ॐ पुराणानि तृप्यंतु । ॐ छन्दाꣳसि तृप्यंतु । ॐ यज्ञास्तृप्यंतु । ॐ अध्ययनं तृप्यतु । ॐ द्यावापृथिव्यौ तृप्येताम् । ॐ अन्तरिक्षं तृप्यतु । ॐ अहोरात्राणि तृप्यंतु । ॐ मासास्तृप्यंतु । ॐ ऋतवस्तृप्यंतु । ॐ संवत्सरस्तृप्यतु । ॐ वरुणस्तृप्यतु । ॐ समुद्रास्तृप्यंतु । ॐ नद्यस्तृप्यन्तु । ॐ गिरयस्तृप्यंतु । ॐ क्षेत्राणि तृप्यंतु । ॐ वनानि तृप्यंतु । ॐ ओषधयस्तृप्यंतु । ॐ वनस्पतयस्तृप्यंतु । ॐ पशवस्तृप्यंतु । ॐ नागास्तृप्यंतु । ॐ उरगास्तृप्यंतु । ॐ सुपर्णास्तृप्यन्तु । ॐ वयाꣳसि तृप्यन्तु । ॐ गावस्तृप्यंतु । वसवस्तृप्यंतु । ॐ रुद्रास्तृप्यन्तु । ॐ आदित्यास्तृप्य-

(१) निरग्निकस्तु सर्वत्र देवर्षिपितृमनुष्यादितर्पणेषु देवादिनाम द्वितीयाविभक्त्यन्तं समुच्चार्यान्ते तर्पयामीति पदमुच्चार्य तर्पयेत्, अग्निं तर्पयामीत्यादि ।

न्तु। ॐ मरुतस्तृप्यन्तु। ॐ सिद्धास्तृप्यन्तु। ॐ साध्यास्तृप्यन्तु। ॐ गन्धर्वास्तृप्यन्तु। ॐ पिशाचास्तृप्यन्तु। ॐ यक्षास्तृप्यन्तु। ॐ रक्षाँसि तृप्यन्तु। ॐ भूतानि तृप्यन्तु। ॐ नक्षत्राणि तृप्यन्तु। ॐ अश्विनौ तृप्येताम्। ॐ अप्सरसस्तृप्यन्तु। ॐ चतुर्विधभूतग्रामस्तृप्यतु। ॐ मरीचिस्तृप्यतु। ॐ अत्रिस्तृप्यतु। । ॐ अङ्गिरास्तृप्यतु। ॐ पुलस्त्यस्तृप्यतु। ॐ पुलहस्तृप्यतु। ॐ क्रतुस्तृप्यतु। ॐ प्रचेतास्तृप्यतु। ॐ वसिष्ठस्तृप्यतु। ॐ भृगुस्तृप्यतु। ॐ नारदस्तृप्यतु। ॐ सप्तर्षयस्तृप्यंतु। ॐ अरुन्धती तृप्यतु। एवमादयः एते मे स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः॥

एवमेकैकाञ्जलिना देवान्सन्तर्प्य, अपसव्येन दक्षिणाभिमुखः पातितवामजानुः पितृतीर्थेन द्विगुणदर्भैः कृष्णैस्तिलैः पितॄन्स्तर्पयेत्॥

ॐ कारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दाँस्याचार्यास्तृप्यन्ताम्। एवं त्रिः।

ॐ राणायनिस्तृप्यतु। ॐ शाट्यमुग्रस्तृप्यतु। ॐ व्यासस्तृप्यतु। ॐ भागुरिस्तृप्यतु। ॐ औगुण्डिस्तृप्यतु। ॐ गौल्गुलविस्तृप्यतु। ॐ भानुमानौपमन्यवस्तृप्यतु। ॐ काराटिस्तृप्यतु। ॐ मशको गार्ग्यस्तृप्यतु। ॐ वार्षगण्यस्तृप्यतु। ॐ कौथुमिस्तृप्यतु। ॐ शालिहोत्रस्तृप्यतु। ॐ जैमिनिस्तृप्यतु। त्रयोदशैते सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः॥

ॐ शटिस्तृप्यतु। ॐ भाल्लविस्तृप्यतु। ॐ काल्लविस्तृप्यतु ॐ ताण्ड्यस्तृप्यतु। ॐ वृषाणकस्तृप्यतु। ॐ रुरुकिस्तृप्यतु। ॐ शमबाहुस्तृप्यतु। ॐ अगस्त्यस्तृप्यतु। ॐ बष्कशिरास्तृप्यतु। ॐ हूहूस्तृप्यतु। दशैते मे प्रवचनकर्त्तारः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः।

ॐ कव्यवालस्तृप्यतु। ॐ नलस्तृप्यतु। ॐ सोमस्तृप्यतु। ॐ यमस्तृप्यतु। ॐ अर्यमास्तृप्यतु। ॐ अग्निष्वात्तास्तृप्यन्तु। ॐ सोमपीथास्तृप्यन्तु। ॐ बर्हिषदस्तृप्यन्तु। ॐ यमस्तृप्यतु। ॐ धर्मराजस्तृप्यतु। ॐ मृत्युस्तृप्यतु। ॐ अन्तकस्तृप्यतु। ॐ वैवस्वतस्तृप्यतु। ॐ कालस्तृप्यतु। ॐ सर्वभूतक्षयस्तृप्यतु। ॐ औदुम्बरस्तृप्यतु। ॐ दध्नस्तृप्यतु। ॐ नीलस्तृप्यतु। ॐ परमेष्ठी तृप्यतु। ॐ वृकोदरस्तृप्यतु। ॐ चित्रस्तृप्यतु। ॐ चित्रगुप्तस्तृप्यतु।

अथ स्वपितृन्नामगोत्रपूर्वकं प्रतिपुरुषमञ्जलित्रयेण तर्पयेत्(१)। अमुकगोत्र अस्मत्पिताऽमुकशर्मा तृप्यतु। एवं पितामह-प्रपितामहयोः। गोत्रा अस्मन्माता अमुकी देवीदा तृप्यतु। एवं पितामही-प्रपितामह्योः। प्रथमं पित्रादिकांस्त्रीन्। ततो मात्रादींस्त्रि-

(१) कात्यायनमते पितृपितामहप्रपितामहान्, मातृमातामहप्रमातामहान् प्रत्येकमञ्जलित्रयेण तर्पयेत्। स्त्रीणाञ्च सर्वत्र पितृगोत्रेण पृथक् तर्पणं, न तु सपत्नीकशब्देन। तच्च यथासम्भवं अञ्जलित्रयरूपं एकाञ्जलिरूपं वा सर्वासां समानम्। इत्थञ्च तन्मते मातृत्रयमातामहत्रयस्थाने मातृमातामहप्रमातामहरूपमेकमेव त्रिकं ज्ञेयम्।

भिस्त्रिभिः । सपत्नजननीम् । एवमेव मातामहप्रमातामहवृद्धप्रमातामहांस्त्रीन् । एकैकाञ्जलिना तत्पत्नीः । स्वपत्नीम् । तनयं, तनयाम् । ततः पितृव्य-मातुल-पितृव्यपत्नी-मातुलपत्नीभ्रातॄन्, भ्रातृपत्नीं, पितृष्वसारं मातृष्वसारं भगिनीं तासामपत्यानि तत्पतींश्च श्वशुरं श्वश्रूं 'गुरुं शिष्यं मित्रञ्च (आप्तांश्च) एतानेकैकाञ्जलिना तर्पयेत् ।

ततः सव्येनाचम्य कण्ठावलम्बिकृतोपवीतः कुशमध्यैः प्रत्यङ्मुखः शबलैस्तिलैस्तर्पयेत् ॥

ॐ सनकस्तृप्यतु ॥ २ ॥ ॐ सनन्दनस्तृप्यतु ॥ २ ॥ ॐ सनातनस्तृप्यतु ॥ २ ॥ ॐ कपिलस्तृप्यतु ॥२॥ ॐ आसुरिस्तृप्यतु ॥२॥ ॐ वोढुस्तृप्यतु ॥२॥ ॐ पञ्चशिखस्तृप्यतु ॥२॥

एतानञ्जलिद्वयेन तर्पयेत् प्रत्येकम् । ततोऽपसव्येन—

यत्र क्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
मातृवंशे मृता ये च पितृवंशे तथैव च ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥ १ ॥

इति मन्त्रेणाञ्जलिं जलाद्बहिरुत्तरतो निःक्षिप्य, कुशांस्त्यजेत् मन्त्रेण—

येषां न पिता न भ्राता न पुत्रो नान्यगोत्रिणः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैस्तदा ॥ १ ॥

ततो—

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ १ ॥

इति मन्त्रेण जलाद्बहिः स्नानवस्त्रं निःपीड्याचम्य कुशान्-

स्त्यक्त्वा, अन्यान् धृत्वा, सूर्यादिभ्योऽर्घं दद्यात्। ततः ऋष्यादीन् संस्मृत्य, शक्तश्चेत्तिष्ठन् हृदि तिर्यक्कृतकरः प्राङ्मुखो गायत्रीमष्टोत्तरशतं जप्त्वा सङ्कल्पं कुर्यात्। 'अनेन गायत्र्या मत्कृतेन जाप्येन रुद्रात्मा रविः प्रीयताम्'। "उत्तरे शिखरे जाता" इति विसर्जयेत्।

ॐ उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी।
रुद्रेण समनुज्ञाता गच्छ देवि यथासुखम्॥

इति मध्याह्नसन्ध्या॥

---

## अथ सायंसन्ध्या।

तत्र सर्वं प्रातःसन्ध्यावत्। विशेषो यथा। 'सायंसन्ध्योपासनमहं करिष्ये' इति सङ्कल्पे। ध्यानावाहने विशेषः—

अपराह्णे तु या सन्ध्या कृष्णाङ्गी कृष्णवाससा।
गरुडस्कन्धमारूढा तथा च विष्णुना सह आवह।
वृद्धा सामवेदमुखी विष्णुना सह आवह।
आयाहि वरदे देवि त्र्यक्षरे विष्णुवादिनि।
सरस्वति च्छन्दसां मातर्विष्णुयोने नमोऽस्तु ते॥

आचमने विशेषः। अग्निश्चमेति नारायण ऋषिः प्रकृतिच्छन्दः अग्निर्देवता आचमने विनियोगः।

ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्-

स्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्च दुरितं मयि इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥

ततो ऋतञ्च सत्यञ्चेत्यनेनाघमर्षणानन्तरं उपविश्य पुनरञ्जलित्रयं गायत्र्या सूर्याभिमुखः क्षिपेत् । ततः सूर्यमुपस्थाय, सूर्याभिमुखो नासाग्रे अधोमुखकृतहस्तो मौनी गायत्रीं सञ्जप्य, सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या सत्कृतेन जाप्येन विश्वात्मा रविः प्रीयताम् । तत 'उत्तरे शिखरेति' विसर्जयेत् ।

ॐ उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी ।
विष्णुना समनुज्ञाता गच्छ देवि यथासुखम् ॥

इति सायंसन्ध्या ।

इति श्रीसामवेदीयत्रिकालसन्ध्या-तर्पणप्रयोगः समाप्तः ।

---

प्राप्तिस्थानम्—
चौखम्बा संस्कृत-सीरीज-आफिस
वाराणसी